हंसाष्टकम्

ब्रह्माहं सत्स्वरूपं चितिसुखमविदन् माययाऽऽक्षिप्यमाणः,
तत्सम्पर्कापनुत्त्यै शरणमुपगतः सद्गुरुं ज्ञाततत्त्वम् ।
श्रावं श्रावं तदुक्तीश्चिरतरमननापास्तदुस्तर्कजालः,
साक्षात्कारैकशेषाद्विगलितनिखिलोपप्लवोऽहं स एव ॥ १॥

मृत्पिण्डं नीडमाप्यास्थिरचितमनिलान्दोलितं रन्ध्रपूर्णं,
हंसाश्रित्य प्रमाद्यँस्त्यजसि यदि सुखावाप्तिहेतुं विचारम् ।
वर्षैरल्पैरमुष्मिन् विदलति वितथीभूततत्स्थैर्ययत्नो,
विस्मृत्योच्चैर्गतिं स्वां त्वमशरणतयाऽधःपतन् शोचितासि ॥ २॥

हंस त्वां बन्धुकामां प्रकृतिमिह गुणैश्चित्तदेशेऽसुसिक्ते
प्रागुप्त्वा कर्मबीजं मधुरकटुफलं व्यस्य संसारवृक्षम् ।
द्वेषेप्सामोहजालं विमतवसुवपुर्ग्रन्थि - विस्तारयन्तीं
दृष्ट्वा कृत्वा हताशां सुखमयमभयमानसं मा प्रहासीः ॥ ३॥

प्रक्षीणे मेघवृन्दे विरमति च वृषे स्वामिनो निःस्पृहत्वात्,
अश्रोतव्ये द्विजानां वचसि च शिखिनां नीरजस्यात्मलाभे ।
काले सत्त्वान्यभावं गमयति चपलोन्मेषणे क्वापि याते,
योग्यालोक्यस्वरूपश्चिरमधिशयितं मानसं हंस मुञ्च ॥ ४॥

सर्वेष्वङ्गेष्वविन्दन् खगतिषु विहितान्वेषणो वन्ध्ययत्नो
विश्वासादाप्तवाचां जलवपुषि भृशं भ्रान्तवान् मानसे च ।
विज्ञाने तं विवेक्तुं सुचिरमनुसरन् त्वां विदेहेष्वपश्य-
न्नद्यानन्दैकतानं सकलकलतया निश्चितं हंसमीक्षे ॥ ५॥

शाखाः सर्वागमानां सततमधिवसन् ज्ञात आरण्यकोक्त्या,
क्रामद्भिः सप्तभूमीः पवनविजयिभिर्योगमार्गेऽनुयातः ।
सन्दृष्टस्तारनादश्रुतिमनुसरसो मूर्ध्नि पद्मे निरीह-
श्चितानन्दस्वभावो लसदतुलगतिर्हन्त लब्धः स हंसः ॥ ६॥

चित्रं निष्पक्षपातोऽतिशयविशदभा नित्यमुक्तोपभोगो
व्याहृत्यादौ त्रिमात्रं पदममृतफलं सर्वदाऽऽस्वाद्य तृप्तः ।
योगाङ्गोपास्तिशुद्धैश्चिरमनुहसं वीक्षितो दिव्यवन्यां
हंसोऽद्य स्वान्तरङ्गे विहरति सततं चित्रकूटस्थरूपः ॥ ७॥

जातिं श्लाघ्यामनिच्छन् विगलितकुतुकः प्रांशुवंशेषु वस्तुं
पुन्नागेभ्यो विरक्तः कुरवविरसधीर्निःस्पृहो बन्धुजीवे ।

रम्भायां वीतलोभः कुवलयमभजन् मुक्तपद्मानुरागो
हंसः सम्प्रत्यशोके विरचयति पदं माधवस्य प्रसादात् ॥ ८॥

सोपानं साङ्ख्ययोगोपनिषदभिहितार्थानुभूतिक्रमाणां
साहित्योल्लाससीमागतसरलतरश्लेषसौन्दर्यसारम् ।
ज्ञात्वा हंसाष्टकं मेऽवहितशुचिमनोवृत्तिभिः पूर्णकामा
भूयासुर्वीतमोहा इति तमनुभवन् वक्ति गङ्गाधरः शम् ॥ ९॥

इति श्रीविद्वद्वर मनवल्ली श्रीगङ्गाधरशास्त्रीविरचितं
हंसाष्टकं सम्पूर्णम् ।